# अथर्ववेदीय दन्त्योष्ठविधिः

## अथ दन्त्योष्ठविधिः

### प्रथमोऽध्यायः

अथर्वाणमृषिं देवं देवहयशिरोधरम्
प्रणम्य सम्प्रवक्ष्यामि दन्त्योष्ठविधिविस्तरम् १

छन्दस्यध्ययने प्राप्ते विदुषामथ धीमताम्
बकारे संशयो नित्यमौष्ठ्यं दन्त्यमिति स्म ह २

तस्मात्तद्विधि निर्णये संशयछेदनाय च
मुक्ता दन्त्या प्रयोज्याम औष्ठ्यान् वक्ष्ये क्रमाहितः ३

भपरं यत्र दृश्येतानिंग्ये स्पर्शनं क्वचित्
औष्ठ्यं तत्र पदे धीरो बिभीतो बिभ्रतीर्यथा ४

आद्युदात्ते बले बाणे बिल शब्दे तथैव च
समस्तेऽपि यत्र स्यातामन्तोदात्तो विशिष्यते ५

बलदाबलानुग्राबलधन्वा तथैव च
बलासं बाहू आचार्याः सर्वास्वेव विभक्तिषु ६

बली बलेन बर्हिश्चाबलेन बलीयसे
ब्रध्नः किल्बिषं वःकेतुः कुम्बं बाधिष्ट बालिति ७

बाहुं बोधि तथा बंधुर्बहुबाधे बृहच्च यत्
पिबति ब्रुवते चैव यथार्थाः सम्प्रकीर्त्तिताः ८

बस्तवासिनो बाह्लकैर्बाहुवीर्ये तथैव च
बहवः काबवं बाह्लोर्बोध बह्ले तथैव च ९

तथा बध्न्यं ताबुवं बह्लीर्नवमः संप्रकीर्त्तिताः
एते सर्वेषु शब्देषु प्रथमस्पर्श्या हि मताः १०

वैबाध देवबन्धुं च विबद्धस्तु विबन्धुषु
द्वितीय स्पर्शो विज्ञेयो विबबाधे तथैव च  ११

बाहौ बाहवो बहुलं बुध्न्या बद्धकमेव च
एते सर्वे भवन्त्योष्ठ्या ये नोक्तास्ते तु दन्तजाः  १२
इति प्रथमोऽध्यायः

द्वितीयोऽध्यायः

अधरादुत्तरे भागे भागात्प्रतिविभागशः
दशनाग्रेण संस्पृष्ट्यो न तु पीडासु योजयेत्  १

कम्बलं बल्बजं बीजं लिबुजा बणमहाँ असि
बिष्कले ब्रह्म बर्जर्ह्ये शबले बेधिषे बयः  २

बहिष्ठः बुध्न्यः पड्वीशमर्बुदं बधिरस्तथा
आबयोबिन्दुः संबिंबं काहाबामुदुम्बलम्  ३

कब्रु पीबसि बंधुरं कंबूकाँ बलिनस्तथा
कुबेरः स्तम्बजं बभ्रौपब्दैः परिबेधिरे  ४

असंबाधे नैर्बाध्येन बद्धे बद्धानि कूल्बजं
बतो बतासि बंधुं च बिसं क्लीबं बुजे बुजः  ५

बधान प्राबंधायाश्चोल्बं काबेरकस्तथा
आबेधुरैलबश्चैवाबेधे बल्हिकानि च  ६

अबोधि बार्हत्सामे घोषबुद्धा तथैव च
बंधनं यत्र शेषं स्यादाबधे मे निदर्शनम्  ७

अलाबु बजः बाणं स्यादाद्युदात्तो यदा भवेत्

ब्रह्म शब्दं तु सवार्थमौष्ठ्यमेव विदुर्बुधाः ८

छुबुकाब्दष्कये बाले केशबाले तथैव च
अधिबाले वयः प्रोक्तं शेषेषु परिमाणतः ९

बिभेदादिषु भेदाश्च परि पूर्वं बले तथा
बंधु वा सिंधुरपर एतेषां तु बलः क्वचित् १०

तुछुब्दश्चबुकश्चैव बभूवुश्च बभूवुषी
एते सर्वे परित्यज्य बकारोन्योन्य भद्यन ११

इति द्वितीयोऽध्यायः

दन्त्योष्ठविधिः समाप्तः

Reference:
Sastri, Ramagopala, *The Dantyoṣṭhavidhiḥ or the Fourth Lakṣaṇa Treatise of the Atharva Veda, edited with an introduction, translation (Hindi), and an index*, (Lahore, Vidya Prakasha Press, D.A.V. College, 1921).